# पराप्रावेशिका

https://sa.wikisource.org/s/cdk

**रचयिता - क्षेमराजः**

---

*विश्वात्मिकां तदुत्तिर्णां हृदयं परमेशितुः।*
*परादिशक्तिरूपेण स्फुरन्तीं संविदं नुमः॥*

इह खलु परमेश्वरः प्रकाशात्मा प्रकाशश्च विमर्शस्वभावः विमर्शो नाम विश्वाकारेण विश्वप्रकाशेन विश्वसंहरणेन चाकृत्रिमाहमिति विस्फुरणम्। यदि निर्विमर्शः स्यादनीश्वरो जडश्च प्रसज्येत। एष एव च विमर्शः - चित् चैतन्यं स्वरसोदितापरावाक्स्वातन्त्र्यं परमात्मनो मुख्यमैश्वर्यं कर्तृत्वं स्फुरत्ता सारो हृदयं स्पन्द इत्यादिशब्दैरागमेषूद्घोष्यतेऽत एवाकृत्रिमाहमिति-सतत्त्वः स्वयम्प्रकाशरूपः परमेश्वरः पारमेश्वर्या शक्त्या शिवादिधरण्यन्तजगदात्मना स्फुरति प्रकाशते च। एतदेवास्य जगतः कर्तृत्वमजडत्वं च जगतः कार्यत्वमपि एतदधीनप्रकाशत्वमेवैवम्भूतं जगत् प्रकाशरूपात् कर्तुर्महेश्वरादिभिन्नमेव भिन्नवेद्यत्वेऽप्रकाशमानत्वेन प्रकाशनायोगाद्र किञ्चित्स्यादनेन च जगतास्य भगवतः प्रकाशात्मकं रूपं न कदाचिद्विरोधीयत एतत्प्रकाशनेन प्रतिष्ठां लब्ध्वा प्रकाशमानमिदं जगदात्मनः प्राणभूतं कथं निरोद्धुं शक्नुयात्कथं च तन्निरुध्य स्वयमवतिष्ठेतातश्चास्य वस्तुनः साधकमिदं वाधकमिदं प्रमाणमित्यनुसन्धानात्मकसाधकवाधकप्रमातृरूपतया चास्य सद्भावस्तत्सद्भावे किं प्रमाणम् - इति वस्तुसद्भावमनुमन्यतां तादृक्स्वभावे किं प्रमाणम् - इति प्रष्टृरूपतया च पूर्वसिद्धस्य महेश्वरस्य स्वयम्प्रकाशत्वं सर्वस्य स्वसंवेदनसिद्धम्। किञ्च प्रमाणमपि यमाश्रित्य प्रमाणं भवति तस्य प्रमाणस्य तदधीनशरीरप्राणनीलसुखादिवेद्यं चातिशय्य सदा भासमानस्य वेदकैकरूपस्य सर्वप्रमितिभाजः सिद्धावभिनवार्थप्रकाशस्य प्रमाणवराकस्य कश्चोपयोगः। एवं च शब्दराशिमयपूर्णाहन्तापरामर्शसारत्वात् परमशिव एव षट्त्रिंशतत्त्वात्मकः प्रपञ्चः। षट्त्रिंशतत्त्वानि च - १ शिव २ शक्ति ३ सदाशिव ४ ईश्वर ५ शुद्धविद्या ६ माया ७ कला ८ विद्या ९ राग १० काल ११ नियति १२ पुरुष १३ प्रकृति १४ बुद्धि १५ अहङ्कार १६ मनः १७ श्रोत्र १८ त्वक् १९ चक्षुः २० जिह्वा २१ घ्राण २२ वाक् २३ पाणि २४ पाद २५ पायु २६ उपस्थ २७ शब्द २८ स्पर्श २९ रूप ३० रस ३१ गन्ध ३२ आकाश ३३ वायु ३४ वह्नि ३५ सलिल ३६ भूमय इत्येतानि।

अथैषां लक्षणानि। तत्र शिवतत्त्वं नाम इच्चाज्ञानक्रियात्मककेवलपूर्णानन्दस्वभावरूपः परमशिव एव। अस्य जगत् स्रष्टुमिच्छां परिगृहीतवतः परमेश्वरस्य प्रथमस्पन्द एवेच्छा शक्तितत्त्वमप्रतिहतेच्छत्वात्सदेवाङ्कुरायमाणमिदं जगत् स्वात्मनाहन्तयाच्छाद्य स्थितं रूपं सदाशिवतत्त्वमङ्कुरितं जगदहन्तयावृत्य स्थितमीश्वरतत्त्वमहन्तेदन्तयोरैक्यप्रतिपत्तिः शुद्धविद्या स्वस्वरूपेषु भावेषु भेदप्रथा माया यदा तु परमेश्वरः पारमेश्वर्या मायाशक्त्या स्वरूपं गृहयित्वा सङ्कुचितग्राहकतामश्नुते तदा पुरुषसञ्ज्ञोऽयमेव मायामोहितः कर्मबन्धनः संसारी परमेश्वरादभिन्नोऽप्यस्य मोहः परमेश्वरस्य न भवेत् - इन्द्रजालमिव ऐन्द्रजालिकस्य स्वेच्छया सम्पादितभ्रान्तेर्विद्याभिज्ञापितैश्वर्यस्तु चिद्घनो मुक्तः परमशिव एव। अस्य सर्वकर्तृत्वं सर्वज्ञत्वं पूर्णत्वं नित्यत्वं व्यापकत्वं च शक्तयोऽसङ्कुचिता अपि सङ्कोचग्रहणेन कलाविद्यारागकालनियतिरूपतया भवन्ति। अत्र कलानामास्य पुरुषस्य किञ्चित्कर्तृताहेतुर्विद्या किञ्चिज्ज्ञत्वकारणं रागो विषयेष्वभिष्वङ्गः कालो हि भावानां भासनाभासनात्मकानां क्रमोऽवच्छेदको भूतादिर्नियतिर्ममेदं कर्तव्यं नेदं कर्तव्यमिति नियमनहेतुरेतत्पञ्चकमस्य स्वरूपावरकत्वात्कञ्चुकमित्युच्यते महदादिपृथिव्यन्तानां तत्त्वानां मूलकारणं प्रकृतिरेषा च सत्त्वरजस्तमसां साम्यावस्थाविभक्तरूपा निश्चयकारिणी विकल्पप्रतिबिम्बधारिणी बुद्धिरहङ्कारो नाम - ममेदं न ममेदमित्यभिमानसाधनं मनः सङ्कल्पसाधनमेतत्त्रयमन्तःकरणम्। शब्दस्पर्शरूपरसगन्धात्मकानां विषयाणां क्रमेण ग्रहणसाधनानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि। वचनादानविहरणविसर्गानन्दात्मक्रियासाधनानि परिपाठ्य वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि। शब्दस्पर्शरूपरसगन्धाः सामान्याकाराः पञ्च तन्मात्राणि। आकाशमवकाशप्रदं वायुः सञ्जीवनमग्निर्दाहकः पाचकश्च सलिलमाप्यायकं द्रवरूपं च भूमिर्धारिका

*यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः।*
*तथा हृदयबीजस्थं जगदेतच्चराचरम्॥*

इत्याम्नायनीत्या पराभट्टारिकारूपे हृदयबीजेऽन्तर्भूतमेतज्जगत्। कथं - यथा घटशरावादीनां मृद्विकाराणां पारमार्थिकं रूपं मृदेव यथा वा जलादिद्रवजातीनां विचार्यमाणं व्यवस्थितं रूपं जलादिसामान्यमेव भवति तथा पृथिव्यादिमायान्तानां तत्त्वानां सतत्त्वं मीमांस्यमानं सदित्येव भवेदस्यापि पदस्य निरूप्यमाणं धात्वर्थव्यञ्जकं प्रत्ययांशं विसृज्य प्रकृतिमात्ररूपः सकार एवावशिष्यते तदन्तर्गतमेकत्रिंशत्तत्त्वं ततः परं शुद्धविद्येश्वरसदाशिवतत्त्वानि ज्ञानक्रियासाराणि शक्तिविशेषत्वादौकारेऽभ्युपगमरूपेऽनुत्तरशक्तिमयेऽन्तर्भूतानि। अतः परमूर्ध्वाधः सृष्टिरूपो

विसर्जनीय एवम्भूतस्य हृदयबीजस्य महामन्त्रात्मको विश्वमयो विश्वोत्तीर्णः परमशिव एवोदयविश्रान्तिस्थानत्वान्निज स्वभावः। ईदृशं हृदयबीजं तत्त्वतो यो वेद समाविशति च स परमार्थतो दीक्षितः प्राणान् धारयन् लौकिकवद्वर्तमानो जीवन्मुक्त एव भवति देहपाते परमशिवभट्टारक एव भवति॥

*इति महामाहेश्वरश्रीमदभिनवगुप्तोपजीविक्षेमराजविरचिता पराप्रावेशिका समाप्ता॥*